## मासिकी पत्रिका

संस्कृतभाषाप्रचारिणी सभा, चित्तूरु (आ० प्र०)

संपुटः ३ | 15 OCTOBER 1965 | क्रमाङ्कः १०

आश्वयुजाङ्कः] शकवर्षः १८८७ [मूल्यम् ४० पैसाः

# विषयसूचिका

# मङ्गलम्

ज़यतु भारतवीरवारो
  जयतु तत्तेजः परम् ।
जयतु तत्साहसिकता सा
  जयतु भक्तिः स्थिरतरा ॥ ॥ जयतु ॥

कपट्नाटकविकटनिष्ठुर-
  कुटि़लपाकविनाशकः ।
भ्रुकुटिमात्रपलायितारि-
  प्रकररचिताप्रञ्जलिः ॥ ॥ जयतु ॥

विहतरोदोंतरपराक्रम-
  प्रहृतहृतहतशात्रवः ।
विकलितारिविशिष्टसाधन-
  विस्मिताखिलभूजनः ॥ ॥ जयतु ॥

भवतु मङ्गलमतुलकीर्तेः
  र्भवतु शौर्याञ्चितगतेः ।
अवतु भारतमेतदीया-
  ऽविरतविक्रमचंक्रमः ॥ ॥ जयतु ॥

# सम्पादकीयम्

आकाशे कालमेघा अपसृताः , झंझामारुतः स्थगितः, निर्घाताः प्रशान्ताः, उल्काः अवगृहीताः । प्रभातं सुप्रभातमासीत् । दिशः प्रसन्नाः ।

पाकभारतयुद्धं अवसितं । ऐक्यराज्यसमितेः आदेशः लाहोरनगरनाशपाशः चैनापिशाचापदेशः अमेरिकाशापो वा पाकस्य विवेकमुद्भावयत् । उभयदेशयोः अभयप्रख्यापनाय अन्धकारिता (ब्लाकौट्) अपसारिता ।

किमेतेन ? पाकसैनिकाः युद्धविरामसीमां उल्लङ्घयन्ति पदे पदे, पृष्ठतः प्रविश्य स्थानान्याक्रमन्ति, कपटवचनानि जल्पन्ति । अग्रराज्यानि च कानिचन मनस्यन्यत् वचस्यन्यत् कर्मण्यन्यच्च दर्शयन्ति । ऐक्यराज्यसमितेः स्थिरता कार्यपटुता च शून्येव प्रतिभाति । कानिचन राज्यानि तां शिखण्डीकृत्य स्वदुरालोचनां भारतोपरि प्रसारयन्ति, पाकिस्थानं च सान्त्वयन्ति तेन मुष्टं प्रतिग्राहयितुं यतन्ते । युद्धविरामसीमापर्यवेक्षकाः भारतमवतारिताः । ते च पर्यवेक्षन्ते तत्तत्प्रदेशान् । अत्रान्तरे एव पाकानीकिनी कलहाय रेचयति भारतपताकिनीम् । स्फोटाः विस्फोटाः प्रस्फोटाश्च उभतश्च नाशमुत्पादयन्ति सन्धिश्शान्तिर्वा न गोचरीभवति । चैनीयाश्च मार्जाला इव समयं निरीक्षन्ते, वृका इव व्याजान् प्रकाशयन्ति । मित्राणि च कानिचन राज्यानि स्वमित्रतां स्फुटयन्ति कार्यरूपेणापि । अथापि सिद्धांतसाम्यवैषम्याभ्यां निरन्तरायं आन्तं तत्साहाय्यं भवेन्नवा इति आलोचनीयमेव।

तथापि यस्यकस्यापि साहाय्यं अपेक्षणीयमेवास्माभिः । सहायमात्रनिर्भरतामपहाय स्वशक्तेः प्रवर्धने प्रयतितव्यम् । आत्मशक्तावेव विजयाशा कार्या न तु अन्यसहाये । गृहे विजत्य खलु बहिर्विजेतव्यम् ।

निर्वाचनानि स्थगयितव्यानि प्रणालिकाश्च काश्चन विलम्बनीयाः। विलासवस्तूनां विदेशेभ्यः अवतारणं सुतरां निरोद्धव्यम् । युद्धावसरवस्तूनामेव यथोचितमवतारणमनुमोदनीयम् । आहारवस्तूत्पादने उत्साहः तदितरोत्पादने अनुत्साहश्च

कर्षकाणामभिवर्धयितव्यः । भिन्नभिन्नाभिप्रायाणां अपि राजकीयनायकानां एकीकरण-मावश्यकम् । पुरग्रामरक्षणसंघेषु तेषां दृढं साहाय्यं सम्पादयितव्यम् ।

आवश्यकवस्तूनां निगूहनं गूढविपण्यां विक्रयश्च अपराधत्वेन भावनीयम् । देशद्रोहिणश्च जिह्मामधवः हृदयविषाः चरैः प्रत्यभिज्ञातव्याः नेतव्याश्च काराम् । पुरग्रामरक्षणसंघाश्च स्थापयितव्याः, तेषां कर्तव्यानि च विवेचनीयानि, आवश्यकत्वे तत्सभ्यानां कर्माभ्यासशिक्षणं च दातव्यम् ।

प्रायशः पुरग्रामरक्षणसंघस्य कर्तव्यानि एतानि एतादृशानि च भवितु-मर्हन्ति —

१. पुरं ग्रामं वा प्रत्येकसहस्रजनसंख्यां मनसिकृत्य प्रत्येकप्रान्तत्वेन विभजेत । एकैकप्रान्तस्थस्य सुप्रसिद्धस्य तत्प्रतिनिधित्वं कल्पनीयम् । तत्प्रान्तस्था एव त्रिचतुराः तत्सहायका निर्णेतव्याः । प्रान्तशः समावेशः प्रतिदिनं निर्णीतकाले निर्वर्तयितव्यः । सकलप्रतिनिधि-समावेशश्च दिनत्रये दिनत्रये संपादनीयः सामान्यतः, आवश्यकतायां प्रतिदिनं च ।

(a) तत्तदधिकृतप्रान्ते नूतनागतानां पर्यवेक्षणं, धनधान्यादीनां निगूहन-प्रक्रियाभिज्ञानं, अथ च स्थानिकानामन्यत्रगमनप्रत्यागमने तत्कारणं इत्यादि परिज्ञानम्, संदेहविषये प्रमुखाय सूचनम्, तत्सम्मत्या रक्षकेभ्यः संसूचनम् ।

(a) असत्यवार्तानां प्रचारनिरोधः, पुरग्रामवासिनां धैर्योत्पादनं, ऐकमत्य-दार्ढ्योपादनम्, काले काले च प्रजामध्ये शुभवार्ता प्रकाशनम् । अस्मद्योधानां पराक्रमाभिवर्णनम् ।

(c) शात्रवकृतायां च विपत्तौ अनाकुलं तदपसरणनैपुण्यशिक्षणं — उदाहरणतः बमादिप्रयोगे खातादिषु निम्नस्थलेषु आत्मगोपनम्,

युद्धविमानागमनसूचनमात्रेणैव दीपादीनां निर्वापणेन यथास्थितप्रदेशेषु स्वरक्षार्हेषु निलयनं, गृहदाहादिषु संभूय अग्निनिर्वापणम्, शस्त्रास्त्रव्रणापदि प्रथमचिकित्सापूर्वकं वैद्यकसहायप्रापणम्, विद्युदादीनां छेदे पुनस्संयोजनम्, जलवाय्वादिषु विषसंयोगसंदेहे प्रजानां अस्मद्योधानां च तद्बोधनपूर्वकं तत्सेवननिषेधः, शत्रोः आगमनज्ञाने भारतसैनिकानां तत्सूचनम्, आहारजलवस्त्वादीनां शत्रुहस्तगतिनिरोधः ।

(d) युद्धावश्यकवस्तूनां आत्मप्रभुतायाः हस्ते समर्पणम्, आत्मप्राणाधारकाणामपि पदार्थानां यावच्छक्यं अल्पपरिमाणेनैवोपयोगः, रक्तदानं, रिक्थदानम्, शत्रोरतिसन्धानम्, देशरक्षकस्य क्षेमानुसन्धानम् च ।

(e) अनाथानां संरक्षणं पोषणं प्रियभाषणं आहारादिभिश्च तोषणं तद्बन्धूनामन्वेषणं परस्परसंयोजनं च ।

एवमादीनि देशजनमानप्राणरक्षणोपयोगीनि कर्माणि बहूनि निर्वर्तनीयानि। बालभटानां प्रौढवयस्कानां च योधानां विषयः स्वीकर्तव्याः सर्वैर्जनैः ।

एवं कृते देशोपद्रवः लघुर्भवेत् । वयं च भारतीयाः अस्मद्भारतरक्षणाय आत्मप्राणमपि तृणमिव अर्पयिष्यामः अवसरे सानन्दम् ॥

# सुलभपाठमाला १८

## क्रियाः — भविष्यत्कालः

बालः पाठं पठिष्यति । बालाः पाठं पठिष्यन्ति । बालौ पाठं पठिष्यतः ।
रामः गुरुं नंस्यति । जनाः राजानं नंस्यन्ति । कृष्णार्जुनौ नंस्यतः ।
सूर्यः आकाशे भ्रमिष्यति । नक्षत्राणि भ्रमिष्यन्ति । नेत्रे भ्रमिष्यतः ।
भृत्यः घटं वक्ष्यति । भृत्याः भारं वक्ष्यन्ति । वृषभौ शकटं वक्ष्यतः ।

त्वं पठिष्यसि । यूयं पठिष्यथ । युवां पठिष्यथः ।
त्वं नंस्यसि । यूयं नंस्यथ । युवां नंस्यथः ।
त्वं भ्रमिष्यसि । यूयं भ्रमिष्यथ । युवां भ्रमिष्यथः ।
त्वं वक्ष्यसि । यूयं वक्ष्यथ । युवां वक्ष्यथः ।
अहं पठिष्यामि । वयं पठिष्यामः । आवां पठिष्यावः ।
अहं नंस्यामि । वयं नंस्यामः । आवां नंस्यावः ।
अहं भ्रमिष्यामि । वयं भ्रमिष्यावः । आवां भ्रमिष्यावः ।
अहं वक्ष्यामि । वयं वक्ष्यामः । आवां वक्ष्यावः ।
अहं त्वां द्रक्ष्यामि । त्वं मां द्रक्ष्यसि । बालः आवां द्रक्ष्यति ।
वयं चित्रं द्रक्ष्यामः । यूयं चित्रं द्रक्ष्यथ । बालाः चित्रं द्रक्ष्यन्ति ।
आवां चित्रं द्रक्ष्यावः । युवां चित्रं द्रक्ष्यथः । बालौ चित्रं द्रक्ष्यतः ।

श्रीशृंगेरीपीठाधिपतयः श्रीजगद्गुरु श्रीमभिनवविद्यातीर्थस्वामिनः आत्मनां मद्रासयात्रा प्रसंगेन 19—9—65 दिने चित्तूरुपुरमागत्य संस्कृतभाषाप्रचारसभां कटाक्षयित्वा सभाप्रदत्तां विज्ञापनाञ्जलिमंगीकृत्य आशीर्भिस्सभामन्वगृह्णन् ।

## सभा समर्पिता विज्ञापनाञ्जलिः

वाणीं भजत गैर्वाणीम् !

ॐ श्री गुरुभ्यो नमः

श्रीमत्परमहंसपरिव्राजकाचार्यवर्य पदवाक्यप्रमाणपारावारपारीणयमनियमासनप्राणायाम प्रत्याहारध्यानधारणासमाध्यष्टाङ्गयोगानुष्ठाननिष्ठ तपश्चक्रवर्त्यनाद्यविच्छिन्न श्री शङ्कराचार्य गुरुपरम्पराप्राप्तषड्दर्शनस्थापनाचार्य व्याख्यानसिंहासनाधीश्वर सकलनिगमागमसारहृदय सांख्यत्रयप्रतिपादक वैदिकमार्गप्रवर्तक सर्व-तन्त्रस्वतन्त्रादिराजधानीविद्यानगरमहाराजधानीकर्णाटकसिंहासन-प्रतिष्ठापनाचार्य श्रीमद्राजाधिराजगुरुभूमण्डलाचार्य ऋष्यशृङ्ग-पुरवराधीश्वर तुङ्गभद्रातीरवासि श्रीमद्विद्या-शङ्करपादपद्माराधक

श्रीजगद्गुरु श्रीचन्द्रशेखरभारतीस्वामिगुरुकरकमलसञ्जात

**श्रीजगद्गुरु शृङ्गेरी श्रीमदभिनवविद्यातीर्थस्वामिभ्यः**

संस्कृतभाषाप्रचारिण्या सभया

# सप्रश्रयं समर्पिता विज्ञापनाञ्जलिः

जगदाचार्यवर्याः,

भवत्कटाक्षप्रसरणकारणात् एव खलु मतिभेद - मतभेद - कलुषिते कालेऽस्मिन् भारते आस्तिकतालता अम्लाना अनुपद्रवा च प्रवर्धते । भवत्संकल्पेनैव खलु हैंदवसंस्कृतिफलभूताः नित्यनैमित्तिककाम्यक्रिया अविच्छन्नाः प्रवर्तन्ते जपतपोध्यानादयश्च साधकानां निर्विघ्ना अनुवर्तन्ते। भवत्कृपयैव वेदपरम्परा अविच्छन्ना जीवति अमरभाषा च विद्योतते नित्यनूतनप्रकाशेन शास्त्रैः सह ।

संकल्पसिद्धा यतिप्रवराः,

भवत्पीठानुबद्ध श्रीशिवगङ्गापीठाधिपतीनां शङ्कराचार्यस्वामिपादानामाशीर्वचनेन उज्जीविता एषा सभा स्वनिवासाय किञ्चन प्राचीनं भवनमासादितवती क्रयेण। अथ च साक्षात्तत्रभवतां भवतां पादधूलिपवित्रितं आशीःपात्रं च सत् तदेव भवनं वत्सरान्तरे द्विभूमिकं द्विगुणितशोभं च पुरत उदतिष्ठत् यस्मिंश्च बालानां पाठप्रवचनानि भगवद्भजनादिकं काले काले समावेशाश्च आस्तिकानां अनुवर्तन्ते, पञ्चसहस्रग्रन्थसंपुटैः ग्रन्थालयश्च राराजते। एतया सभया गैर्वाणी नाम्नी मासिकी पत्रिकापि निर्विघ्नं प्रकाश्यते इति च भवदनुग्रहपरीवाह एवायं। अधुना च पुनर्भवत्पादक्षेपपवित्रिता इयं शाला अवश्यं अचिरादेव शोभावहं बृहत्समावेशादियोग्यं स्वरूपं धरिष्यतीति भवत्पादपरागरसिका वयं मन्महे।

लोकोद्धरणदीक्षिता योगिवरिष्ठाः,

भारतीयसंस्कारसंरक्षणाय संस्कृतप्रचारं प्रथमं साधनं मन्वानैः अस्मादृशैः क्षुद्रैः क्रियमाणामपि सेवां इमां अंगीकृत्य कृत्यनिर्देशेन अस्मान् प्रचोद्य अस्मत्प्रयत्नं विस्तारयन्तु सफलयन्तु च नितराम्।

अकिञ्चनाः कृतज्ञताञ्जलिमात्रमर्पयामो वयं अस्मदाह्वानमपि अवितथयित्वा आगमप्रयासमूरीकृतवद्भ्यः पादस्पर्शपावितसभाभ्यो भक्तपराधीनेभ्यो महद्भ्यो भवद्भ्यः॥

विश्वावसु-<br>भाद्रकृष्णनवमी

इति भवत्कृपावर्धिता,<br>संस्कृतभाषाप्रचारिणी सभा, चित्तूरु.

श्रीमदभिनवविद्यातीर्थस्वामिनः, शृङ्गेरी.

**श्रीस्वामिनामभिभाषणसंग्रहः —**

अहमत्र आगतवानस्मि षड्वर्षेभ्यः पूर्वं अवालोकयंश्च इमां सभां । अद्यतु एतस्याः रूपमेव परिवर्तितं प्रतीयते । न हि प्रत्यभिज्ञातुं शक्नोमि सैवेयमिति नामफलकमन्तरा । पुरा यत्र स्रोतः पुलिनमधुना तत्र सरितामिति रीत्या पुरातन-जीर्णशीर्णभवनस्थाने अद्य महान् द्विभूमिकः प्रासादः समुद्योतते । सर्वासामपि विषयाणां प्रादेशिकीनां संस्कृतमूलत्वात् सा अस्माभिः सर्वैरपि संरक्षणीया यया रक्षितया अस्मदेकता च सुरक्षिता भवेत् । केचित् द्राविडीं संस्कृतात् पृथग्भूतां वदन्ति, परन्तु ते न जानन्ति अत्यधिकानि पदानि संस्कृतविकृतिभूतान्येवेति । अस्मत्संस्कृतेः संरक्षणाय संस्कृतसंरक्षणं शिक्षणं च आवश्यकम् । संस्कृतप्रचाराय च एतादृश्यः संस्थाः बह्व्यः यतन्ते । तासु च इयं नितरां मामानन्दयति । एषा क्रमविकासवती दिनदिनसंवर्धमाना स्वकार्यक्षेत्रं विस्तारयति । गैर्वाण्याः प्रकाशनं च अद्यतने काले न सुलभं कर्म । तथापि अविच्छिन्नं तां प्रकाशयतीति नितरां संतुष्यामि । अधुना अस्मत्सर्वकारः स्वयंसंस्कृतसेवकसंस्थाभ्यः यत्किंचिदुपकरिष्य-तीति श्रूयते । तन्मन्ये एतत्सभया अपि तत्साहाय्यं लभ्येतैवेति । अहमाशासे एतत्सभा दिनदिनाभिवृद्धिं प्राप्नुयात् सभ्याश्च सानन्दाः संस्कृतसेवां इतोपि अधिकतरं निर्वहेयुरिति ॥

# वार्षिकोत्सवः

## श्रीस्वामिशिवानन्दस्मारककलामन्दिरम्

### ९ जनपथः

### इन्द्रप्रस्थम्

सुविदितमेवेदं संस्कृतभाषाप्रचारिण्याः सभायाः नवीनतमं केन्द्रं इन्द्रप्रस्थे स्थापितमिति । क्रोधिवर्षस्य उत्तरायणपरीक्षासु इन्द्रप्रस्थकेन्द्रे एकादश परीक्षार्थिनः परिचयपरीक्षायां सम्मिलिताः सर्वे च उत्तीर्णाश्च अभवन् इति प्रकटयितुं नितान्तं हर्षनिर्भराः स्मः । तेषु परीक्षार्थिषु पञ्च पुरुषाः षट् महिलाश्च आसन् । द्वे महिले प्रथमश्रेण्यां उत्तीर्णतामलभेताम् । शिष्टेषु सप्त द्वितीयश्रेण्यां द्वौ तृतीयश्रेण्याञ्च सफलतां प्रापुः ।

गतमासे विश्वावसुभाद्रकृष्णद्वितीयारविवासरे इन्द्रप्रस्थकेन्द्रस्य प्रथम-वार्षिकोत्सवः सम्पन्नः । तत्र हृषीकेशतः शिवानन्दाश्रमाध्यक्षैः परमहंसपरिव्राजकाचार्यैः श्रीचिदानन्दस्वामिभिः प्रधानासनं स्वीकृतम् । लौहगन्त्रीसमितेः भूतपूर्वाध्यक्षैः श्रीयुतैः D. C. Baijal महोदयैः (Ex. Chairman, Railway Board, New Delhi) अध्यक्षासनं च अलंकृतम् ।

अस्मदीयकलामन्दिरस्य विद्यार्थिनीनां स्वागतगानैः हिन्दीमयैः आरम्भोत्सवः सञ्जातः ।

स्वागतानन्तरं गुरुवर्याणां श्रीशिवानन्दस्वामिनां पादुकापूजा वेदमन्त्रैः निर्वर्तिता ।

तत्पश्चात् प्रधानकार्यदर्शिन्या श्रीमत्या कौसल्या कलामन्दिरकार्यकलाप-परिपूर्णा निवेदिका श्राविता ।

अत्र निवेदिकायां सङ्गीतशिक्षणं (Music classes), हस्तकलाशिक्षणं (Fine Arts) सौचिकाभ्यासः (Tailering), हिन्दीप्रचारः (Hindi classes) संस्कृतप्रचारः (Sanskrit classes) च तेषां विद्यार्थिनां योग्यताभिवृद्धिश्च समाख्यातानि ।

निवेदिकाश्रवणानन्तरं योगिवर्यैः श्रीचिदानन्दस्वामिभिः आशीःपुरस्सरं स्वपावनकरकमलाभ्यां संस्कृतप्रमाणपत्राणि उत्तीर्णेभ्यः प्रसादितानि ।

योगिवर्यैः चिदानन्दस्वामिभिः "संस्कृतभाषैव अनतिदूरभविष्ये राष्ट्रवाणी भवितुं योग्या, तयैव भाषया धार्मिकता, शासनप्रबन्धाश्च सुगमा भविष्यन्ति" इति स्वभाषणे प्रकटितम् ।

अध्यक्षवर्यैः श्रीमद्भिः बैजलमहोदयैरपि अस्माकं भारते संस्कृतस्य नितरां आवश्यकत्वं प्रतिज्ञाय, वयस्कैरपि संस्कृतभाषायां प्रदर्श्यमाना श्रद्धा अत्यन्तं प्रशंसिता ।

तदनन्तरं यवनविजिगीषून् भारतसैनिकान् प्रति विजयप्रार्थनां प्रगाय, गुरुप्रार्थनां नीराजनं च विधाय, गुरुप्रसादः सभासदैः स्वीकृतः ।

श्रीमद्भिः नरसिंहाचार्यवर्यैः धन्यवादाः समर्पिताः । राष्ट्रगानानन्तरं सभा समाप्ता ।

सञ्चालकः

सर्वेश्वरः

श्रीमते रामानुजाय नमः

श्रीमद्वरवरमुनये नमः

# अष्टोत्तरशतदिव्यदेशस्तुतिः

## श्री कांची प्र० भ० अण्णङ्गराचार्यस्वामिकृतिः

( संक्षिप्ता )

**अष्टोत्तरशतदिव्यक्षेत्रपतीनां प्रभातचिन्तायै ।**
**तत्तन्नामावल्या महिता स्तुतिरियमुदेति संक्षिप्ता ॥**

१. चोलमण्डले चत्वारिंशत्

श्रीरङ्गभुजगशयनं श्वेतगिरीशं करम्बनूर्नाथम् ।
अन्बिल्क्षेत्राधीशं निचुलापुरनाथतञ्जपुरनाथौ ॥ १.

पुळ्ळम्पूदङ्गुडिपति-मप्पक्कुडदिव्यदेशशयमीशम् ।
श्रीधेनुनगरनाथं श्रीमदलुन्दूरुपुरवराधीशम् ॥ २.

लघुशार्दूलपुरेशच्छलशयनं सारमन्दिराधीशम् ।
श्रीकुम्भघोणनाथं शङ्खेन्दुपुरेश-कण्डियूर्नाथौ ॥ ३.

तिरुविण्णगराधीशं श्रीकृष्णपुरेशशुक्रपुरनाथौ ।
परिमलरङ्गपुरेशं सुगन्धपुरनाथनन्दिपुरनाथौ ॥ ४.

तिरुवालिनगरनाथं नागपुराधीशममितसौन्दर्यम् ।
श्रीकूडलूरुनाथं कपिस्थलक्षेत्रपतिफणीन्द्रशयम् ॥ ५.

श्रीकण्णङ्गुडिनाथं श्रीशं श्रीकृष्णमङ्गलपुरेशम् ।
काळिश्रीरामपुराधीशं श्रीचित्रकूटपुरनाथम् ॥ ६.

(अथ तिरुनांगूर्मण्डलसन्निहितैकादशेश्वरानीडे)

श्रीमणिमाडक्षेत्राधीशं पुरुषोत्तमं च वैकुण्ठम् ।
अरिमेयदिव्यनगराधीशं माधवममर्त्यगणपुरगम् ॥ ७.

अरुणहिरण्मयमन्दिरनाथं श्रीपार्थशयनपुरनाथम् ।
श्रीमणिकूटपुरेशं तिरुवेळ्ळक्कुळनिकेतनाधीशम् ॥ ८.

श्रीतेत्तियम्बलेशं कावळनिलयस्थकृष्णभगवन्तम् ।
इति चोलमण्डलेशांश्चत्वारिंशतमहर्निशं सेवे ॥ ९.

२. मध्यदेशे द्वौ

मध्यमजनपदनाथौ द्वावेव सदा हृदा कलये ।
श्रीदेहलीपुरीशं श्रीमदहीन्द्राख्यनगरनाथं च ॥ १०.

३. पांड्यमण्डले अष्टादश

श्रीपाण्ड्यमण्डलस्थान्यष्टादशदिव्यदेशरत्नानि ।
अध्यासीनानर्चामूर्तिहरीन्नित्यमेव हृदि कलये ॥ ११.

कुरुकापुरादिनाथं वरगुणमङ्गलपुरीश्वरं देवम् ।
महिततटाकपुरेशं पुळिङ्गुडिक्षेत्रपतिमनन्तशयम् ॥ १२.

श्रीमद्वैकुण्ठपतिं श्रीमत्कोळूरपुरपतिं शयितम् ।
महाप्लुवमपुरेश्वरमकरायतकर्णपाशभगवन्तम् ॥ १३.

तुलविल्लिमङ्गलेशौ अरविन्दाक्षं च देवपतिमीडे ।
श्रीशठकोपमुनीश्वरनगरीनिकटस्थनवपुराण्येवम् ॥ १४.

श्रीमद्वनगिरिनाथं गोष्ठीपुरनाथसत्यगिरिनाथौ ।
श्रीदर्भशयनरामं शिशिरमरुत्-क्षेत्रनाथमधुरेशौ ॥ १५.

श्रीमोहनपुरनाथं श्रीधन्विनवीनपत्तनाधीशम् ।
श्रीवरमङ्गलनाथं वैष्णववामनपतिं च हृदि कलये ॥ १६.

४. केरलमण्डले त्रयोदश

श्रीमदनन्तपुरेशं तिरुवण्परिसारदिव्यदेशपतिम् ।
तिरुवाट्टारुपुरेशं तिरुमूळिक्कळनिकेतनं देवम् ॥ १७.

श्रीव्याघ्रपुरवरेशं तिरुवण्वण्डूरुदिव्यदेशपतिम् ।
विद्वत्कोडपुरेशं काट्कररनाथं च वल्लवाळीशम् ॥ १८.

तिरुवारन्विळनाथं तिरुक्कडित्तानदिव्यदेशेशम् ।
श्रीनावायुपुरनाथं स्तौमि च शितारुदिव्यदेशपतिम् ॥ १९.

५. तुण्डीरमण्डले द्वाविंशतिः

हस्त्यद्रीशयथोक्तकृदष्टभुजाधीशनृहरिदीपाभान् ।
उरगस्थले त्रिविक्रम-गगनाभ-जलाभ-घननिभान्देवान् ॥ २०.

चोरं ज्योत्स्नेन्दुमुखं वैकुण्ठपतिं प्रवालवर्णहरिम् ।
पाण्डवदूतं चेत्थं चतुर्दश स्तौमि दिव्यकाञ्च्यधिपान् ॥ २१.

अथ विजयराघवाख्यं गृध्रसरस्तीरपारिजातनिभम् ।
किंगृहदेशाधीशं वीररघुं भक्तवत्सलं देवम् ॥ २२.

तोयाद्रिनिलयनाथं तिरुविडवेन्दस्थले वराहहरिम् ।
घटिकाद्रिनिलयनृहीरं स्थलशयमथ पार्थसारथिं नौमि ॥ २३.

तुण्डीरमण्डलेशाः द्वाविंशतिदेवतल्लजा इत्थम् ।
प्रातस्सायं च हृदा विचिन्तनीया गिरा च संस्तुत्याः ॥ २४.

६. उत्तरमण्डले त्रयोदश

वेङ्कटभूधरभूषणमहोबिलाद्रीशनरहरिं देवम् ।
साकेताधिपतिं हरिमथ मधुराधीशगोकुलाधीशौ ॥ २५.

नैमिशसालग्रामश्रीबदरीनाथपिरिदिनाथांश्च ।
श्रीखण्डनगरनाथं द्वारवतीनाथमनिशमिह नौमि ॥ २६.

क्षीराम्भोधिव्यूहं परमे धाम्नि च परात्परं देवम् ।
एवं ह्यष्टोत्तरशतदिव्यस्थानेश्वरान् सदा नौमि ॥ २७.

सप्तविंशतिसत्पद्यमालिकामनघामिमाम् ।
हृदि चिन्तयतामष्टौ शतं देवाः करे स्थिताः ॥

इत्थमण्णङ्गराचार्यो वादिभीकरवंशजः ।
श्रीवैष्णवानां नित्यानुसन्धानाय व्यजिज्ञपत् ॥

# राजाजीकथा १८

## मूकजीवी

लेखकः – आ. वरदराजः

कश्चित्कर्षकः स्वराजानं प्रति असंतृप्तस्सन् अटवीं गतः तपस्तप्यन्नासीत् । "भगवन् ! अस्माकं राजा न साधुः सज्जनो वा । समीचीनं कञ्चिद्राजानं नः प्रदेहि" इति प्रार्थयामास ।

अन्यः कश्चिद्दरिद्रः तस्मिन्नेव वने तपस्यन्नासीत् । मह्यं अत्यन्तं सन्निहितो विश्वसनीयश्च सुहृत्कश्चित् द्रुह्यति स्म । स्वामिन् ! न किञ्चित्कांक्षितं मे । "साधुः सुशीलः कश्चित्सुहृद्दीयतां मे" इति प्रार्थितं तेन ।

सेवकः कश्चित् – "अहं कियत् शमित्वा कर्म करोमि ! तथापि अस्य मे स्वामिनो तृप्तिरसंतृप्तिः सर्वदा" – इत्यसन्तुष्टो रुष्टोऽटवीं गतः; सोऽपि तत्र तपस्यन्नास्त ।

"हा ! पित्राऽपि खल्वहं परित्यक्तोऽस्मि; यदि साक्षाज्जनकोऽपि शत्रुर्जातस्तर्हि इतो दुःखतरं नु किं ? " इति पुत्रः कश्चित्पितरं प्रकुप्य निर्गत्य गृहादटवीं गतस्तप्तुम् ।

अपरः कश्चित्सुपुत्रः स्वमातरं द्विषन्ननुकूलां स्वामीष्टप्रदायिनीं मातरं प्रदेहीति भगवन्तं प्रार्थयमानः तपस्तेपे ।

एवमेवान्यः कश्चिद्देवादिदेवं प्रत्येव वैमुख्यं प्रदर्शयन् सर्वं त्यक्त्वाऽटवीं गतः, किं कार्यमित्यजानन्, इतिकर्तव्यताविमूढस्सन् तपस्यन्नास्त ।

★ ★ ★

तत्र मृगयुः कश्चित्पालितैः शुनकैस्सहागतः। तपस्यतस्तान् दृष्ट्वा तस्य मृगयोः कुक्कुरः कश्चित् सहेलं जहास।

अरे! वराकाः! कुतो युष्माकं बुद्धिः एवं वक्रतां गता? यदि यूयमपि मद्वत् कुक्कुरभावं अभजिष्यत तर्हि नितान्तं सन्तुष्टा अभविष्यत इत्याह।

कथमेतत्? इति देवं प्रति क्रुद्धो भक्तः प्राह। अन्येऽप्यवशिष्टाः एकैकशः कथमेतत्? कथञ्चैतत्? इति पृच्छन्तः श्वानं परिचक्रमुः।

पश्यतासौ मे स्वामी मृगयुः। स एव मम देवदेवः, पिता च माता च सुहृत्स एव; स एव राजा मम पालकश्च; सत्येवं न मेऽभिलाषोऽन्यत्र कुत्रचित्। स्वामिनाऽनन्योऽहं अनन्यार्हश्च तस्य। यदि युष्मास्वपि एकैकोपि श्वभावं (स्वभावं विहाय) प्राप्नुयात्, मानवमेकं भजेत्तर्हि नूनं अतीव सन्तुष्टो भवेत्। भक्तिः किल सुखावहा। नरा विज्ञानं श्रद्धाय विश्वस्य, श्राद्धाय निश्श्वासाय च (श्वासराहित्याय) भवन्ति। तद्धि विज्ञानं विपरीतज्ञानमपि भवति कदाचित् इत्युपन्यास्थत् स कुक्कुरः।

★ ★ ★

किं ज्ञातम्? स मृगयुः कोन्विति? स साक्षान्महादेवः। अल्पीयांसं मृगं प्रदर्श्य तपस्तप्यतां मूर्खाणां उपदेशाय तथाऽऽगतः।

भो वत्साः! यूयमपि गृहे पालितान् कुक्कुरान् परिशीलयत स्पष्टं सुबोधं च स्याद्यदुक्तं मया।

कुक्कुरो मूकजीवी, स भषति; न भाषते। परन्तु तस्य नेत्रे पश्यत। दृष्टे सत्यन्ततः स्पष्टं प्रतिभायादिदं यत् शुनो देहे कश्चिच्छिशुः स्वच्छः स्वभावेन, मूकतां गतोऽन्यगेहवासेनेव, तस्य नेत्रयोर्द्वारेण दृश्यत इति।

श्वा स्वभावेन साधुर्विश्वास्य श्च । प्राप्ते काले स प्राणानपि निर्विचारं परित्यजेत् स्वामिनो योगक्षेमकृते । अतस्स प्रेम्णा पालनीयः । व्याधिग्रस्तस्य तस्य बाधाऽनिर्वचनीया । रोदितुमप्यशक्त इवैवं सकरुणं रोदिति श्रोतारोऽवश्यं तस्य दयेरन् ।

श्वेतजातीयाः स्वपालितान् श्वजातिविशेषान् अतीव प्रेम्णा सम्यग्रक्षन्ति । अस्माभिः तद्दृष्टान्तेन तद्वद्वर्तितव्यम् । तेषां साहित्ये सन्ति श्वाख्यायिकोपाख्यानानि बहूनि । अस्मद्देशे श्वगाथा न बहुलाः ।

हाँ, अस्ति काचिन्महाभारते । धर्मजः पाण्डवानां अग्रजः । चरमदशायां स स्वानुजैस्सह स्वर्गारोहणं प्रचक्रमे । हिमवत्सानूनां अधिरोहणसमये जायानुजानां शक्तिः क्षीणतां गता । पुरोगमने अशक्ताः ते एकैकशोऽधःपतिताः प्राणैर्वियुक्ताश्च । तदात्वेऽपि कश्चित् श्वा धर्मजं अनुसृत्यैव गतः । पत्नी द्रौपदी अनुजाश्च मध्येमार्गे देहं विहाय स्वर्गताः । अपि तु श्वा पुनः धर्मपुत्रेण साकं यावदन्तं गतः ।

देवेन्द्रः धर्मपुत्रं स्वर्गं नेतुं सरथस्समागतोऽभिमुखम् । श्वानं विहाय केवलं अहमेव रथमारोढुं नेच्छामि इति धर्मपुत्रो हठं साधयामास । इन्द्रोऽपि तं नितरां प्रशशंस ।

स श्वा साक्षात् धर्मदेवतैव । आत्मानं परीक्षितुं तथा आगच्छदिति सुस्पष्टं धर्मजोऽज्ञासीत् ।

यद्यपीयं कथा श्वानमधिकृत्य न प्रवृत्ता, परन्तु धर्मपुत्रस्य धार्मिकतां गुणातिशयं चाधिकृत्य प्रवृत्ता । तथाऽपि पुराणेषु धर्मस्य श्वरूपेण उपवर्णनं अवधेयम् ।

गौः पयो ददाति । श्वा तु पयसोऽप्यतिशयितं अमृतप्रायं भक्तिरसं प्रयच्छति ।

ॐ

# सत्यम्

लेखकः - श्री नारायणमूर्तिः,
चैतन्यपाठशाला,
आल्लगड्डा.

सत्यं परमात्मनो रूपम् । सत्यं धर्मस्य मूलम् ।
सत्यं पुण्यस्य निदानम् । अतः सदा सत्यं पालनीयम् ।
हरिश्चन्द्रः राज्यं तत्याज न तु सत्यम् । दशरथः श्रीरामं तत्याज न तु सत्यम् ।
धर्मराजः वनवासं स्वीचकार न तु सत्यं तत्याज ।
गान्धी महात्मा सर्वाणि कष्टानि सेहे न तु सत्यं तत्याज ।
तस्मात् कदापि सत्यं न त्याज्यम् । सदा सत्यं वक्तव्यम् ।
सदा सत्येन व्यवहर्तव्यम् । सदा सत्यं समाश्रयणीयम् ।
वाण्यां सत्यं विचारे सत्यं व्यवहारेऽपि सत्यं जीवितपर्यन्तं सत्यस्य पालनं कर्तव्यम् । संकटे सत्यं न त्याज्यम् । विपदि सत्यं न त्याज्यम् । कष्टकालेऽपि सत्यं न त्याज्यम् । मनसि सत्यं स्यात् । वाचि सत्यं स्यात् । जीविते सत्यं स्यात् । सत्याचारः स्यात् । सत्यविचारः स्यात् । सत्यं स्यात्सर्वकार्येषु ॥

सम्पादय धनं विद्यां सत्यं वद हितं मृणु ।
दयां दर्शय सर्वत्र धर्मं चर शुचिर्भव ॥

***

# षष्ट्यब्दपूर्तिमहोत्सवः

विश्वावसुवत्सराश्वयुजशुद्धतृतीया सोमवासरे (27—9—65) तारिकायां एतत्सभाकोशाधिकारिणः आस्तिकाग्रेसरस्य श्रीमतः मदल्लपल्लि मुनिसुब्रह्मण्यश्रेष्ठिनः सपत्नीकस्य षष्ट्यब्दपूर्तिमहोत्सवः चिरपुर श्रीकन्यकापरमेश्वरीदेवस्थानधर्मशालायां सम्पन्नः । पूर्वस्मिन्नेव दिने सः गङ्गापूजां स्वमातुः मंगांबिकायाः स्वर्णाभिषेकं च निर्वर्त्य षष्ट्यब्दपूर्त्युत्सवाय उपाक्रमत । विविधकलशानां स्थापनावाहनपूजनादिकं जपदानहोमाश्च बहुभिः ब्राह्मणैः निर्वर्तिताः । पौराः बान्धवाः मित्राणि च नानाप्रदेशेभ्यः समागमन् । सुप्रसिद्धभगवद्गीताप्रचारकाः श्रीशङ्करानन्दस्वामिनः शान्तानन्दस्वामिनः, रामपुरीस्वामिनश्च समुपागम्य तौ पुराणदम्पती आशीर्भिरानन्दयन् । बहवश्च सम्मानपत्राणि अपठन् । संस्कृतभाषाप्रचारिण्या सभया आशीर्वादनवरत्नमालिका समर्पिता । तत्रत्ये द्वे रत्ने केवलं अत्र प्रकाश्येते —

षष्ट्यब्दान् संप्रतीर्य स्वगुणगणपरिभ्राजितौ दम्पती तौ
लक्ष्मीकांतांबिकां तां गुरुजनविदितां सुब्रमण्यं च गुप्तम् ।
विख्यातौ दानधर्मैः परिजनभरणैः पुत्रपौत्राभिवृद्ध्या
पायाद्द्वै श्रीरमेशः चिरसुखविभवायुश्श्रियाऽरोग्यभाग्यैः ॥

चिरायुरस्तु ते भृशं
निरामयोऽस्तु तेऽनिशम् ।
मुरारिपादपङ्कजे
पराऽस्तु भक्तिरपि च शम् ॥

## जगद्गुरुप्रशस्तिः — अमूल्या

रचयिता — **आर्षविद्याभूषणः, जटावल्लभः पुरुषोत्तमः,**
मर्लवारिवीथी, काकिनाड.

एषा संस्कृतश्लोकशतनिबद्धा आन्ध्रतात्पर्ययुता च श्रीकाञ्चीकामकोटिपीठाधिपतीनां जगद्गुरूणां श्रीचन्द्रशेखरेन्द्रसरस्वतीस्वामिनां कल्याणगुणगणवर्णनरूपा वर्तते । मुखपत्रे श्रीस्वामिनः प्रतिकृतिशोभिता अन्तश्च तत्प्रभावभरिता च इयं सरलशैल्या समलंकृता विषयगौरवयुता अनुभूतयथार्थविषयगुंफिता च पाठकानां भक्तिविशेषं स्वामिनामनुग्रहविशेषं च जनयतीति न हि संशयलेशः ।

शैलीपरिज्ञानार्थं श्लोकद्वयं उद्ध्रियते –

सामान्ययानं सति यंत्रयाने, धराशयत्वं च महार्घतल्पे ।
उपासनं ज्ञाननिरूढतायां अन्यत्र कुत्रेदमवेक्ष्यतेऽहो ॥

अर्धोपिवासी न स कृत्यखिन्नः, पूर्णोपवासी न जहाति वर्चः ।
अभौतिकं तस्य बलं समस्तं ओजश्च तेजश्च विलक्षणं तत ॥

## श्रीविलासः – मूल्यम् 1–00.

प्राप्तिस्थानम् –

रचयिता
K. C. Jayachandra Sastry,
Sanskrit Pandit
Z. P. Sanskrit High School
Kothapalem (P. O.) (via) KOTA.

लक्ष्मीस्तुतिरूपमिदं शतकं संस्कृतश्लोकरूपं आन्ध्रनागरीलिपिद्वयमुद्रितं आन्ध्रतात्पर्यानुबद्धं च संस्कृतगन्धरहितानामपि पठितॄणां आनन्ददायकं भवति । कवितशैली च सरळमधुरा अतीव रोचते । उदाहरणम् –

मातस्सागरतनये भवदीयापाङ्गमालिकापात्रम् ।
गात्रं लोकपवित्रं भवति च संसारपादपखनित्रम् ॥

तल्ली, समुद्रतनया, नीकटाक्षपरंपरलकु पात्रमगु शरीरमु लोकमुनंदु पवित्रमैन संसारवृक्षमुनकु गोड्डलियगुचुन्नदि ॥

---

## वेमनशतकम्

मूल्यम् रू 1–00

प्राप्तिस्थानम् —

रचयिता – विद्वान् रांपल्लि सीतारामस्वामी
ब्राडीपेट, पालकोल्लु (P. O.)

---

इतःपूर्वमेव द्विताः वेमनशतकं अन्ववदन् । अथापि अयं कविः तदेव शतकं स्वकविताविभवेन संस्कृते अनूद्य स्वरचितश्लोकानां आंग्लानुवादमपि अयोजयत् । एतेन संस्कृतानभिज्ञानामपि प्रदेशान्तरस्थानां सहृदयानां आन्ध्रवाङ्मयं आनन्दजनकं भवेत् । अपितु अत्र श्लोकाः आन्ध्रलिप्यां वर्तन्ते । यदि ते नागरीलिप्यां भवेयुः कवेः वांछितं सफलितं भवेदिति तर्कयामः ।

उदाहरणम् –

वन्ध्यां गां दोग्धुमुद्युक्तः पयोऽल्पमपि नाप्स्यति ।
पुनरेति पदाघातं तथैव कृपणाश्रयः ॥

---

# विमर्शामृतम्

प्रणेतारः — श्रीपरिपूर्णप्रकाशानन्दभारतीमहास्वामिनः

प्राप्तिस्थानम् —

श्रीराणी श्रीनिवासशास्त्री,
आयुर्वेदविशारदः,
राममन्दिरवीथी,
सत्यनारायणपुरम्
विजयवाडा — 4.

मूल्यम् रू. 5—00.

अयं ग्रन्थः ज्योतिस्सिद्धान्त-मन्त्रशास्त्र-वेदान्तशास्त्रीयविषयविमर्शरूपः। अस्मादमृतात् षोडशबिन्दवः निस्सृताः। सर्वत्राऽपि श्रुतिस्मृतीनां प्रबलतराणि प्रमाणानि प्रतिपाद्यस्य उपबृंहणार्थं प्रदत्तानि। एतादृशमालोडनं विविधविषया-नधिकृत्य स्वामिपादैः यत्प्रवर्तितं नूनं तदिदं प्राचीन-नवीनदृक्पथयोः शास्त्रीयं स्वरूपं व्यनक्ति।

स्वरूपवैभवम् :— तिथितत्त्वविमर्शः, ऋतुहेतुविमर्शः, भूभ्रमणनिरासमंडनं इत्यादिषु ज्योतिस्सिद्धान्तस्य, मनोवैभवविमर्शे मन्त्रशास्त्रस्य, वातप्रक्रियाविमर्शे आयुर्वेदशास्त्रस्य, आकाशविमर्शे पूर्णपदार्थविचारे निन्दापवादे च वेदान्तशास्त्रस्य, वैवाहिकांशविमर्शे धर्मशास्त्र-गणितशास्त्रयोः, गीताभिसन्धौ कर्मयोगस्य, षोडशादि-दक्षिणोपपत्तौ गणित-वेदान्तशास्त्रयोः एवं षोडशबिन्दुष्वपि कूलङ्कषो विचारः कृतः।

तुलनात्मको विमर्शः— भौतिकशास्त्रस्य गणितशास्त्रस्य च दृक्पथेन प्राचीन-विषयविवरणं कृतम्। जीवशास्त्रे वेदान्तशास्त्रस्य गणितशास्त्रस्य विभवो दर्शितः। सर्वं प्रकृतिशास्त्रं ब्रह्मविद्यायां प्रतिष्ठितमिति निरूपितम्। अधुनातनलक्षणलक्षितानां पदार्थानां प्राचीनवैज्ञानिकलक्षणानि पदजालानि च समायोजितानि। यथा तिथितत्त्वविमर्शपरिभाषायां खगोलीयानि पदानि —

कफ-वात-पित्तप्रक्रियाः = Anabalism, Matabolism, Catabolism, जीवपङ्कम् = Protoplasm, पुद्गलः = Cell, क्षुद्रदहराणि = Nuclei, जीवकण; प्राणसंज्ञः = Nucleole, जलवायुः = Hydrogen, अग्निवायुः = Oxygen, शमीवायुः = Nitrogen, पीलुः = Atom, पिठरः = Molecule, आग्नेयाग्निः = Electron, आग्नेयजलं = Proton, दिव्यरजतं = Platinum, नागरजतम् = Lead, द्युकाञ्चनम्, दिव्यकाञ्चनम् = Radium, कुरुवर्षीयाः = Americans इत्यादीनि भौतिकशास्त्रीयाणि च पदानि ।

गणितशास्त्रे व्यवह्रियमाणस्य शून्यस्य वेदान्तशास्त्रे व्यवह्रियमाणस्य पूर्णस्य च साम्योपपत्तिं निरूपयन्तः इमे स्वामिनः शून्याङ्कस्य (Zero) भारतीयतां द्रढयन्ति ।

किं बहुना सर्वत्राऽपि विषयविमर्शे स्वामिनः सर्वशास्त्रार्थान् यथोचितं उल्लिखन्तः विवक्षितं सुष्ठु प्रतिपादयासुः ।

यद्येतादृशा ग्रन्थाः शतशः सहस्रशश्च गैर्वाण्याः उपायनानि भवेयुः नूनं गैर्वाणी प्राचीनाऽपि नव्यमार्गेण गच्छन्ती नवोदयं प्राप्नुयादिति वक्तुं न कोऽपि संशयः ।

विमर्शामृतप्रणेतारः सर्वशास्त्रनिष्णाताः श्रीपरिपूर्णप्रकाशानन्दभारती महास्वामिनः गैर्वाण्याः अभिनन्दनीयाः । प्राचीननवीनदृक्पथमाश्रित्य श्रीस्वामिनः गैर्वाण्याः इतोऽप्यधिकां ईदृशीं सेवां आतन्वानाः शरदश्शतं विलसेयुरिति आशास्महे ।

स्वामिभिः सुष्ठूक्तम् – "मद्भावं प्राप्नुवन्त्येव यदि सद्भावमाश्रिताः" इति । कोऽत्र विमर्शः अमृते सिद्धे ? ।

— आ० वरदराजन्

# अन्यायराजप्रहसनम्

## महाकविः श्री व० रामानुजाचार्यः

[ पूर्वानुबन्धः ]

वैकु – नृणां यद्युष्णवातेन मलबन्धो भवेत्तदा ।
काचचूर्णयुतं वाळं भुक्त्वाऽनुष्णतनुर्भवेत् ॥

अन्या – समये भवन्तमाकारयित्वा अस्मत्संस्थानवैद्यं करोमि । तिष्ठतु ।

दुष्टदूतः –(अपवार्य) (हरिदूषकशिवदूषकौ वीक्ष्य) प्रकाशयतं भवत्प्रभावम् ।

हरिदूषक – श्रुणु संग्रहतः ।

सर्वस्मात्पर एव मृत्युविजयी रुद्रो भवानीपतिः ।
यच्छीर्षाङ्घ्रयवलोकने विधिहरी शक्तौ भवेतां न हि ।

शिवदूषकः – सर्वस्मात्परः श्रीपतिरेवेति व्यासतोऽनेकप्रमाणेषु उद्घोषयत्सु हरिदूषकोक्तस्य एकस्यैव पूर्वपक्षस्य सिद्धान्ततया श्रीपतिपारम्यं समासतस्स्थापयामि । श्रुणु ।

तत्सत्यं यदि भस्मनामदनुजात् जाते भये तच्छिर-
श्शक्तिः कुत्र गता तदैव हरिणा रुद्रोऽपि संरक्षितः ॥

दुष्ट – भीषणायैव केवलं भवतोः विभूतिपुण्ड्राणि उत शास्त्रसिद्धानि ?

हरिदूषकः – (जनान्तिकम्) न प्रकाशय रहस्यं । त्वदाशंकितवदेव ।

शिवदूषकः – यदि वैष्णवो जातो भवान् तदा रहस्यमुपदिशामि ।

दुष्ट – भवद्वदहमपि पुण्ड्रधारी यदि विभीषिकेयमिति मां वदेयुः । तत् सूचीशलाकावदूर्ध्वपुण्ड्रधारी भवामि ।

अन्या – (पुरोहितं वीक्ष्य) अचिरेण वैवाहिकमंगळं भवेदिति पूर्वमुक्तं भवता । तत् कथम् ज्ञातम् ?

पुरो – कार्तान्तिकाग्रेसराः वयं त्रिकालज्ञाः ।

अन्या – तदस्तु । मम दौहित्र्याः मरकतवल्याः ज्येष्ठभार्याभ्रातृपुत्रस्य

खरारव्यस्य दण्डिनाम्नः च उद्वाहार्थं दशविधघटनाः अवलोकनीयाः । तत्र प्रथमं कस्यचित् धनिनः पुत्रस्य उत्तरप्रोष्ठपात् दौहित्र्याः मखातारं ।

पुरो – मखा राक्षसगणः उत्तरप्रोष्ठतात् मनुष्यगणः । तन्न गणः, न स्त्रीदीर्घश्च । आखुपशुत्वात् न योनिः न पक्षी च ।

अन्या – रोहिण्यार्द्रारेवतीनां पश्य ।

पुरो – दृष्टम् । माङ्गल्यबन्धनात् परेद्युरेव दौहित्री विधवा भवेत् ।

अन्या – दण्डिनो भरणी ।

पुरो – (सहर्षं) भरणीजातो धरणीधरो भवेत् ।

अन्या – श्रीमद्रामायणे सर्वेषां शकुनं अवलोकनीयम् ।

पुरो – (श्रीमद्रामायणावलोकनं नाटयन्) उत्तरप्रोष्ठपाद्रोहिण्यार्द्राणां श्रीमद्रामलक्ष्मणनागपाशबन्धन - रावणवध - मन्दोदरीप्रलापघट्टपतिता तन्तुः । भरण्यास्तु श्रीरामपट्टाभिषेकपतिता । दौहित्र्याः दण्डिनश्च सर्वविषघटनाः शुद्धास्संबद्धाः ।

अन्या – पक्ष्यादिशकुनानि अवलोकनीयानि ।

पुरो – तथा (इति निष्क्रम्य पुनः प्रविश्य च) महाराज, दृष्टानि इतरेषां ।

एको द्विजो द्वौ च शूद्रौ विधवा संमुखागताः ।<br>
तैलकुम्भवहश्चापि मार्जारो व्यतिरेकतः ॥

दण्डिनस्तु,

आगतस्तु भरद्वाजः सव्यात् दक्षिणमत्र हि ।<br>
तांबूलफलपुष्पादिकरा चापि सुमंगली ॥

दुष्ट – (पुरोहितं वीक्ष्य) भवद्गृहे बहवो विधवास्सन्ति। एताः केन ज्योतिर्विधानज्ञेन दृष्टघटनाः ?

पुरो – कथम् बहवः, विधवादशकमेव। अस्मत्पितृज्योतिर्विधानात् पञ्च पुत्र्यः प्रतिवर्षं एकैका, अस्मज्ज्योतिर्विधानात् प्रतिमासं एकैका विधवा जाता। ज्योतिश्शास्त्रं न विश्वसनीयम्।

अन्या – (दुष्टदूतं वीक्ष्य) अस्मदास्थानपुरोहिते मा कुर्वतिप्रसंगा (पुरोहितादीन् वीक्ष्य) भवन्तः अस्मत्संस्थानार्हा एव।

पुरोहितादयः – सर्वमंगळानि भवन्तु। तथापीयमस्तु भरतवाणी।

राजा धर्मरतो भूयात् नरास्सत्कर्मकारिणः।
काले वर्षतु पर्जन्यः श्रीपतिस्सर्वरक्षकः॥

(इति निष्क्रान्तास्सर्वे)

# विज्ञापनम्

कतिचन मित्राणि पृच्छन्ति किमयं पक्षपातः भवतो युक्तः ? यत् केषांचन लेखकानां नामधेयानां प्रकाशनं, केषांचन प्रतिकृतीनां च, अपरेषां च नाम्नोपि उनुट्टंकनं इति। अत्र किंचिद्विज्ञाप्यते – ये तु लेखकाः लेखान् लिखन्ति तेषां नामानि अवश्यं प्रकाशयामः, यैस्तु सूक्ष्मरूपा प्रतिकृतिमुद्रा प्रेष्यते तेषां सा सम्मुद्र्यते च। अनामकाः ये लेखाः तेषां अहमस्मि अज्ञातः लेखकः इति कल्यन्तु सहृदयाः। एतां स्थितिं अवगम्य यथायोग्यं सरलसंस्कृतगद्यरूपान् बालमतिसन्तोषकान् अल्पशरीरान् निबन्धान् प्रेषयन्तु वार्षिकच्छन्दप्रदानेन दापनेन च उपघ्नतां निर्वहन्तु भवन्त इति सविनयं प्रार्थयते।

भवदीयः
ति. कं. तिरुवेङ्कटाचार्यः
प्रधानमन्त्री.

केचनैव महानुभावाः स्वच्छन्दं स्वच्छन्दं प्रेषितवन्तः । तेषां शुभनामानि
: दीयन्ते । अन्यानपि प्रार्थये स्वकं अवलम्बमपि प्रदातुम् । ति. कं. ति

## Names of Subscribers for Gairvani 1965

(Continuation)

| | | | |
|---|---|---|---|
| 9. | Harimohan Sukla Baberu. | 1 | 50 |
| 0. | K. Prahladagupta, Allagadda. | 4 | 00 |
| 1. | B. R. Gouraha, Ambikapur. | 1 | 50 |
| 2. | T. N. Gopalakrishna Chetty, Kumbakonam. | 5 | 00 |
| 3. | Sri Sankarlal, Tirupati. | 4 | 00 |

(एतदवधि एतावन्त एवेति विज्ञापयामि)

R. N. 8145/60. Postal R. No. H. 493

वार्षिकम् रु. ४-००

# प्रहेलिकाः

लेखकः – वैद्य स्वरूपशास्त्री

बालसंस्कृतसम्पादकः. मुम्बापुरी.

बलोऽहं प्रथमं हित्वा कालोऽहं मध्यमं विना।
आद्यमध्यान्तिमैस्साकं कोहं क्षुत्क्षामसेवितः ॥

[कवलः]

कणोहं प्रथमं मुक्त्वा कङ्कोहं चांतिमं विना।
आद्यमध्यान्तिमैर्युक्तः कोहं स्त्रीलोकवल्लभः ॥

[कङ्कणः]

गलोहमादिमं हित्वा मलोहं मध्यमं विना।
आद्यमध्यान्तिमैर्वर्णैः कथयन्तु भवामिकः ॥

[मङ्गलः]

Published by Sri N. Ramanatha Iyer, B. A., B. L., Advocate &
Secretary, S. B. P. Sabha, Chittoor (A. P.)
Printed by Sri T. K. Thiruvengadacharya,
at Vijaya Press, Chittoor (A. P.) C. 1000